शतंशतानेकवदाशुवेगान् ॥ २४
वैकर्तनेनापि तथाजिमध्ये
सहस्रशो बाणगणा विसृष्टाः ।
ते घोषिणः पाण्डवमभ्युपेयुः
पर्जन्यमुक्ता इव वारिधाराः ॥ २५
स भीमसेनं च जनार्दनं च
किरीटिनं चाप्यमनुष्यकर्मा ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य
ननाद घोरं महता स्वरेण ॥ २६
स कर्णबाणाभिहतः किरीटी
भीमं तथा प्रेक्ष्य जनार्दनं च ।
अमृष्यमाणः पुनरेव पार्थः
शरान्दशाष्टौ च समुद्बबर्ह ॥ २७
सुषेणमेकेन शरेण विद्ध्वा
शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ।
ततः सुमुक्तैर्दशभिर्जघान
सभापतिं काञ्चनवर्मनद्धम् ॥ २८
स राजपुत्रो विशिरा विबाहु-
र्विवाजिसूतो विधनुर्विकेतुः ।
ततो रथाग्रादपतत्प्रभग्नः
परश्वधैः शाल इवाभिकृत्तः ॥ २९
पुनश्च कर्णं त्रिभिरष्टभिश्च

C 8 4528
B 8 69 65
K 8 96 16

— (L 6) T2 शिरश्च (for परश्च) — (L 7) K4 जवेन (for मयेन) K4 सोधाशु, T2 काप्याशु (for सोऽप्याशु) — (L 8) T2 प्रणष्टः — (L 9) K4 कृत्वो, Dn1 क्षत्तो (for कृत्तो) — (L. 11) K4 काय॰ (for सव्य) Dn1 वर्मेगा (for चर्मेगा) T2 क॰ (for च) — (L 12) K4 क्षुरप्रकृत्त (for °प्रकृत्त) K4 धरिण्यां — (L. 13) K4 एव सनत्वादधियोगसवान् (810) — (L 14) K4 किरीटिमाली ]
— After the above, K4 repeats 24[cd]

25 [a]) Ś1 कैवर्तनेन, D5 विकर्तनेन (for वैकर्त°) T1 G M1 8 आशु (for अपि) D6 ययाजिमध्ये; T1 M रणाजि°, T3 G तदाजि° (for तथाजि°) — [c]) D6 चैवम ; S (T3 missing) चाक्षया (for घोषिण ) B4 T1 अभ्यये(T1 °ये)यु , D4 अभ्यपेतु , G1 ह्यभ्युपेयु° (for अभ्यु°) — [d]) S (T3 missing)) -सृष्टा (for -मुक्ता)

26 [a]) Dn1 S (T3 missing) तत स (T1 च) कृष्णं च किरीटिनं च — [b]) D2 चाप्यनुमेय- (for चाप्यमनुष्य-) Dn1 S (T3 missing) वृकोदरं चाप्रतिमप्रभाव (G1 °काश , M2 4 °भाव) — [c]) T1 भीमबलान् (for °बलो) B2-4 Da1 D1.5 G1 [ऽ]भिहत्य, B1.5 विहत्य; D2 om. (for निहत्य) — [d]) D2 निनाद (for न°) K3 चौधैर् (for घोर) K4 महतां K4 वरेण, B2 सुरेण, B5 G1 8 स्वनेन (for °रेण) — After 26, B2 repeats lines 1–2 of 1059*

27 [a]) T1 G M1.2 4 तत स, T2 तं तस्य (for स कर्ण-) K3 B5 D6 T2 G3 -बाणाभिहतं (for °भिहत ) — [b]) S (T3 missing) तत्रा (for तथा) — [c]) M1 अमृष्यमाणा T2 पार्थं — [d]) Ś1 दशाष्टा (for °ष्टौ) K4 समुद्बवर्ह°, D3 (before corr ) समृद्बवर्ह, G1 8 समसुद्ब-वर्ष (for समुद्बबर्ह)

28 [a]) Dn1 S (T3 missing) स केतुम् (for सुषेणम्) Ś1 शिरेण D6 हत्वा (for विद्ध्वा) — [b]) B1 निशितेन (for त्रिभिरेव) — K3 reads 28[cd] after बलवान् in line 2 of 1059* — [c]) K3 Da1 T1 G2 M1 स मुक्तैर्; D2 तु मुक्तैर्, D3 सुमुक्तैर् — [d]) D6 सेनापतिं (for सभा°)

29 [a]) K1 सु- (for स) K2 विशरा, K3 T1 विशिरो (for °रा) — [c]) K3 B D (except D2) S (T3 missing) हतो (G3 अयो) (for ततो) K1 T1 G2 M रथाग्याद्, V1 °श्वाद् (for °ग्राद्) K3 D2 प्ररुग्न , V1 B1 4 Da1 Dn1 D3 4 7 स रुग्ण , B2 3 5 S (T3 missing) प्ररुग्ण , D1 8 सुरुग्ण , D6 च भूमौ, D3 परासु (for प्रभग्न ) — [d]) Some MSS साल (for शाल) K4 D2 इवाभि-कृत्त ; V1 B Da1 Dn1 D1 3–7 S (T3 missing) °वकृत्त (for °भिकृत्त )

30 [b]) D2 भित्त्वा (for विद्ध्वा) — [c]) K1 D6 8 चतुःशतां (D7 °त) (for °तान्) K3 सुयोधनान्, K4 सायुधा*; B2 सायुधानान्, Dn1 D6 °धान्वै, C8 °धीमान् (as in text) S (T3 missing) चतु शत द्विरदाना निपात्य — [d]) B4 D3 7 हयान्, T1 2 महा- (for हत्वा) B1 3 5 Dn1 D2 7 T1 2 अष्टशतान् (for °शत) D6 G M रथाश्च घानाष्ट रणे किरीटी — [e]) Ś सहस्रशश्चाश्च, V1 Dn1 °शोश्वांश्च (for °मश्वांश्च) K3 चतुरश्च (for च पुनश्च) V1 B Da1 Dn1 D1–4.7 8 T1.2 M2–4 स- (for च) G1 सादिनाम् (for सादीन्) — [b]) D2 पत्तिसंघान् (for °वीरान्) — After 30, N T2 ins

1063* कर्णं ससूतं सरथाश्वकेतु-
मदृश्यमञ्जोगतिभिश्च चक्रे ।
ततोऽक्रोशन्कुरवो वध्यमाना
धनंजयेनाधिरथिं समन्तात् ।
मुञ्चाभिविद्ध्यर्जुनमाशु कर्ण

[5]

द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा ।
चतुःशतान्द्विरदान्सायुधीया-
न्हत्वा रथानष्टशतं जघान ।
सहस्रमश्वांश्च पुनश्च सादी-
नष्टौ सहस्राणि च पत्तिवीरान् ॥ ३०
दृष्ट्वाजिमुख्यावथ युध्यमानौ
दिदृक्षवः शूरवरावरिघ्नौ ।
कर्णं च पार्थं च नियम्य वाहा-

वाणं पुरा हन्ति कुरून्समग्रान् ।
स चोदितः सर्वयत्नेन कर्णो
मुमोच बाणान्सुबहूनभीक्ष्णम् ।
ते पाण्डुपाञ्चालगणान्निजघ्नु
र्मर्मच्छिदः शोणितमांसदिग्धा । [10]
तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
निजघ्नतुश्चाहितसैन्यमुग्रा
वन्योन्यमप्यस्त्रविदौ महास्त्रै ।
अथोपयातस्त्वरितो दिदृक्षु- [15]
र्मन्त्रौषधाभ्यां विरुजो विशल्य ।
कृतः सुहृद्भिर्भिषजां वरिष्ठै
र्युधिष्ठिरस्तत्र सुवर्णवर्मा ।
तत्रोपयातं युधि धर्मराजं
दृष्ट्वा मुदा सर्वभूतान्यनन्दन् । [20]
राहोर्विमुक्तं विमलं समग्रं
चन्द्रं यथैवाभ्युदितं तथैव ।

[(L 1) K3 सशरांश्च, B2 3 सरथाश्च, Dn1 D6 सरथ स (for सरथाश्च-) — (L 2) Ś K2-4 D8 ह्यदृश्यम् (for अदृ°) Ś1 Da1 D6 om च B3 4 चकार, Dn1 T2 प्रचक्रे (for च चक्रे) D2 हत्वार्थमध्ये व्यहनत्प्रवीर. (sic) — (L. 3) Dn1 T2 अथ (for ततो) Ś1 मध्यमाना (for वध्य°) — (L. 4) Ś K D2 आधिरथे (K3 °थे) (for °रथि) D2 पुरस्तात्, D6 च वीरं, T2 समेता (for समन्तात्) — (L 5) K3 मुचस्य मिद्धय, K4 स चाभिविद्धो, D6 मुक्ताभिविध्य (for मुक्ताभिविद्धय) K4 D2 कर्णं, D6 कर्णे (for कर्ण) V1 B Da1 D1 3-5 7 प्रमुच (B2 °मुञ्च) बाणानहि पांडु(B5 सुत)-पुत्र — (L 6) B5 अथ, T2 परान् (for पुरा) Ś K1 2 4 समतात्, B1 समेतान् (for समग्रान्) — Ś K1 2 om. lines 7–8 — (L 7) K3 D2 सञ्चो(D2 °नो)दित, K4 Da1 D1 5 संचो° (for स चो°) K4 सर्वबलेन, D6 धार्तराष्ट्रेण (for सर्वयत्नेन) — (L 8) K3 परेषां, K4 V1 B2-5 Da1 D1-4 5 असक्तान्, B1 असह्यान्, D6 समतात्, D7 8 सुमुक्तान् (for अभीक्ष्णम्) — (L 9) D2 पचाल-, D5 -पांचाल्या- (for -पाञ्चाल) Ś K1 2 गणा (for -गणान्) K3 V1 B Da1 D1 3-5 मर्मच्छिद- शोणितपा- स्त्रसु(K3 °पांसुसु, B2 °पा मधु-, D6 °वास्तुसु)का, D2 मर्मच्छिदः क्रोधमरेण मुक्ता — (L 11) K3 तान् (for तौ) — Ś K1 2 om. lines 12–15 — (L. 12) K3 पवसाहौ (sic) (for सपत्नसाहौ) — (L 13) B3 विहित-, D6 सहित- (for चाहित-) Dn1 D6 T2 उग्रन् (for उग्रौ) — (L 14) D8 अन्योन्यतश्च (for °मपि) B1 D3 8 T2 महास्त्रौ (for °स्त्रै) — (L 15) B3 तत्र (for अथ) T2 [उ]पयातुम् (for °यातस्) K4 अथोपयाचस्त्वरितो दिदृक्षु — (L 16) K1 V1 B1 3 5 D1 7 मन्त्रौषधीभ्या, B4 Da1 D1 5 °धिभ्यां, B5 Dn1 T2 °धीभिर् (for °धाभ्यां) K3 निरुजो, B1 4 Dn1 D3 4 7 निरुजो (for विरुजो) — After line 16, K4 T2 ins

1064* नासत्यदस्राविसुतोऽथवाधे-
रथाङ्कविद्याश्रमसुहृद्भि ।
आबद्धपट्टो व्रणलाघवेन
यथा सुरेशो दितिजैः क्षताङ्ग ।

[[(L 1) T2 हसत्यदस्राभिहतोऽथवैर् (sic). — (L 2) T2 अष्टाङ्गविद्यासनसुहृद्भि — (L 3) T2 आबद्धकक्ष्य प्रतिबद्धचेता — (L 4) K4 क्षितांग (for क्षताङ्ग)]]

— (L. 17) V1 तत, D3 कृत, T2 यत (for कृत) Ś K1 2 4 द्विपतां (for भिषजां) Ś1 अनिष्टैर् (for वरिष्ठैर्) — (L. 18) Dn1 सुवर्णवर्णा, D8 °वर्म (for °वर्मा) — (L 19) Ś K2 3 4 Dn1 D8 तथा, B5 T2 अथ, D2 तत, D6 यथा (for तत्र) D2 प्रयात (for [उ]प°) — (L 20) B1 [अ]भिदन् (for [अ]न°) Ś K1 2 4 दृष्ट्वा भूतान्यभ्यनदन्मुदा वै. — (L 21) T2 महाद् (for राहोर्) B3 निपुण (for विमल) K3 सुमाय, D8 सुमग्र (for समग्र) — (L 22) Dn1 [अ]-भ्युदित (for [अ]भ्यु°)]

31 [a]) K3 V1 B D S (T3 missing) दृष्ट्वा तु (D3 °प्याय, M1-4 °ष्ट्वा च) (for दृष्ट्वाजि-) S (T3 missing) अति- (for अथ) — [b]) K3 Da1 D1 5 शूरवीरान्; V1 तत्र वीरान्; B2 D6 शूरवरान् (for °वरान्) K3 अरिघ्नौ (sic), B2 अरिष्टौ (for °घ्नौ) — [c]) V1 निशाम्य (for नियम्य) K1 मियस्य वाहा (sic), Dn1 विलोकयत, T1 निशाम्य वीरा (for नियम्य वाहान्) G1 बाणान् (for वाहान्) — [d]) K3 V1 Dn1 D1 2 4 6 स्वस्था (for स्वस्था) B1 महीस्थाश्च (for °स्थाश्च) Ś K1. 2 3 जना हि वस्थु, K3 जनाधिवस्थु; V1 B Da1 D1-5 8 जना वितस्थु, D7 जनाभितस्थु (for जना वतस्थु) T1 G1 3 M सर्वे महीष्ठा(T1 महीस्था; G1. 3 वरिष्ठा)श्च ततोवतस्थु, T2 G2 सर्वे महीशा(G2 हिस्था)श्च तदोपतस्थु — After 31, N T2 ins

1065* स कार्मुकज्यातलसंनिपात
सुमुक्तबाणस्तुमुलो बभूव ।
ततोऽस्त्रयान्योन्यमिषुप्रवेकै
र्धनंजयस्याधिरथेश्च राजन् ।

न्वस्था महीस्थाश्च जनावतस्थुः ॥ ३१
तततो धनुर्ज्या सहसातिकृष्टा
सुघोषमाच्छिद्यत पाण्डवस्य ।
तस्मिन्क्षणे सूतपुत्रस्तु पार्थं
समाचिनोत्क्षुद्रकाणां शतेन ॥ ३२
निर्मुक्तसर्पप्रतिमैश्च तीक्ष्णै-

C 8 4399
B 8 89 75
K. 8 96 21

[(L. 2) Ś1 K2.4 Dn1 D1 8 समुक्त , B2 प्रमुक्त (for ज्ञमुक्त-) K8 D8 तुमलो — (L 3) K8 तयोस्, D2 ;प्रतास् T2 ततो (for तया) T2 इषु प्रवेगै D6 प्रतस्ततोन्य स्त्विषुभि॰ प्रवेकैर् — (L. 4) B5 [मा]चिरथिम् D2 [ऽ]पि (for च) Dn1 T2 तत्र (for राजन्) ]

— After the above, sequence in T2 is 33cd, 1066*, 1067*, 32, 33ab, 33cd (r)

32 For sequence in T2, cf v l 1065* — a) K8 धनूंषी, K4 D6 धनुर्ज्यां (for ॰ज्यो) K1 सहसाव-कृष्टा; K8 ॰सा निकृंता, K4 ॰सातिकृष्टां, B1 ॰सातिकृत्ता, Da1 D1 6 ॰सा निकृष्टा; D6 8 ॰सा विकृष्टा (D8 ॰ष्टा) (for ॰सातिकृष्टा) Ca cites निकृष्टा T1 2 G M प्रच्छादयामास तत॰ पृषत्कैः — b) K8 B1 2 4 5 Da1 D1 6–8 T1.2 G2 M Ca सघोषम्, D3 सघोषम् (sic), G3 स एव (for सुघोषम्) Ś2 B3 Dn1 अच्छि(Ś2 ॰च्छा)द्यत; B1 आच्छयत; D2 अच्छिनत्, T1 G M आच्छिद्य च (G1 तु); T2 आस्फाल्य च, Ca आच्छिद्यत (as in text) K8 B2 5 D2 6 गांडिवस्य, T1 2 G2 3 M गांडिवज्यां; G1 गांडिवस्वन (for पाण्डवस्य) — c) G1 3 M2–4 अस्मिन् (for त॰) K3 4 D2 8 च (for तु) Dn1 T1 2 G M2–4 फल्गुनं (Dn1 पांडव) सूतपुत्र॰; M1 ****सूतपुत्रं (for सूतपुत्रस्तु पार्थं) — d) Dn1 समाधिनोत्, D2 ॰वृणोत्, G1 ॰च्छिनोत् (for ॰चिनोत्) K1 3 4 क्षुद्रकानां, T2 प्रदराणां, Ca' क्षुद्रकाणां (as in text) D8 सहस्रं (for शतेन)

33 For sequence in T2, of v l. 1065* — a) B5 विमुक्त-, T2 स मुक्त- (for निर्मुक्त-) B1 -सर्पप्रतिपैश्च, T2 -सर्वप्रतिमै॰, G2 -सगप्रतिमै॰ (for -सर्प॰) B2 Dn1 अभीक्ष्ण, D2 6 T1.2 G3 8 M2–4 सुतीक्ष्णैस् (for च तीक्ष्णैस्) — b) D2 तैलप्रयातै , D3.4 7 ॰प्रधूतै , D5 ॰प्रवीत , T1 ॰प्रमूतै (for ॰प्रधौतै॰) V1 खगपत्रराजैः ; B2 5 ॰पत्रवाजितैः, D2 ॰पत्रिवाजैः, G1 ॰वाजिवाजैः ; Ca ॰पत्रवाजैः (as in text) — c) Dn1 D6 S (T8 missing, T2 both times) पश्चा विभेदाशु च वासुदेवं — d) B D7 तदनतरं, D2 ॰नतरे Ś1 K1 2 प्रात्वरंत (K1 ॰तं), K8 प्रहरंत॰; Da1 D1 5 प्राद्रुरत; D2 प्राव्रधंत (for ॰बन्त) Dn1 T2 (first time) अनतर फा(T2 फ)ल्गुनमष्टभिश्च; D6 अनंतर सत्वरं सोमकांश्च, T1 तमतरा प्रासान्सोमकांश्च; T2 (second time) M2–4 तदंतरा प्रत्वरन्सोमकांश्च G1 *******सोम-कांश्च; G2 M तमतरा प्रात्वरन्सोमकाश्च — Dn1 ins after 33 T2 after the first occurrence of 33cd

1066* पूषात्मजो मर्मसु निर्बिभेद
मरुत्सुतं चायुतश शराग्रै ।
कृष्णं च पार्थं च तथा ध्वज च
पार्थानुजान्सोमकान्पातयश्च ।

[(L. 2) T2 मरुत्सुत चाष्टशतै शिताग्रै — (L. 3) T2 कृष्णश्च पार्थश्च ततोर्जुनश्च — (L 4) T2 पार्थानुगा॰सोमका पत्तयश्च ]

Dn1 T2 cont Ś K V1 B Da1 D1–8 ins after 33

1067* प्राच्छादयंस्ते निशितैः पृषत्कै-
र्जीमूतसघा नभसीव सूर्यम् ।
आगच्छतस्तान्विशिखैरनेकै
र्व्यष्टम्भयत्सूतपुत्र कृतास्त्र ।
तैरस्तमस्त्र विनिहत्य सर्वं [5]
जघान तेषां रथवाजिनागान् ।
तथा तु सैन्यप्रवरांश्च राज-
न्नभ्यर्दयन्मार्गणै॰ सूतपुत्र॰ ।
ते भिन्नदेहा व्यसवो निपेतु॰
कर्णेषुभिर्भूमितले स्वनन्त॰ । [10]
क्रुद्धेन सिंहेन यथाश्वयूथ्या
महाबला भीमबलेन तद्वत् ।
पुनश्च पाञ्चालवरास्तथान्ये
तदन्तरं कर्णधनंजयाभ्याम् ।
प्रस्कन्दन्तो बलिन साधुमुक्तैः [15]
कर्णेन बाणैर्निहता प्रसह्य ।
जयं तु मत्वा विपुलं त्वदीया-
स्तलान्विजघ्नु सिंहनादांश्च नेदु ।
सर्वे ह्यमन्यन्त वशे कृतौ तौ
कर्णेन कृष्णाविति ते विनेदु । [20]

[(L 1) Ś2 K8 D2 6 7 प्रच्छादय(Ś2 ॰य)स्, K4 Dn1 प्राच्छादयस्, Da1 D1 5 आच्छादयस् (for प्राच्छा॰) Ś K1 2 4 त, B1 तु (for ते) Dn1 D2 विशिखै (for निशितै ) K2 पृषद्कैर्, K8 Da1 ॰त्कैर्, D8 पृथक्तैर् (for पृषत्कैर्) T1 प्रच्छा-दयनो निशितै पृषत्कैर् — (L 2) B5 जीमूतसंघान्, Da1 D1 5 ॰संघे, D6 ॰संघास् (for ॰संघा) D6 तमसीव (for नभ॰) — (L 4) Da1 D1 5 व्यस्तमयत् (for व्यष्टम्भयत्) D8 कृतास्त्रै , D6 बलीयान् (for कृतास्त्र ) — (L 5) K1 2 अस्तमस्त, K3 4 B1 3.4 D1 4 7 8 अस्त्रमस्त्र, V1 D2 T2 अस्त्रमस्त्रैर्, Dn1 अस्तमस्त्रैर् (for ॰मस्त्र) Ś K Da1 D2–5 च निहत्य (for विनि॰) D6 अस्यतमस्त्र विनिहत्य पार्थं — (L. 7) B2 ततस् (for तथा) B5 च (for तु) K8 चापि, B1 D3 4 7

स्तैलप्रधौतैः खगपत्रवाजैः ।
पट्या नाराचैर्वासुदेवं विभेद
तदन्तरं सोमकाः प्राद्रवन्त ॥ ३३
ततो धनुर्ज्यामवधम्य शीघ्रं
शरानस्तानाधिरथेर्विधम्य ।
सुसंरब्धः कर्णशरक्षताङ्गो
रणे पार्थः सोमकान्प्रत्यगृह्णात् ।
न पक्षिणः संपतन्त्यन्तरिक्षे

तु (for च) D6 तथा च सैन्यप्रवरान्प्रसह्य — (L 8) D4 अभ्यर्दयन् (for 'र्दयन्) D6 व्यक्षोभयत्समरे यतापुत्र — (L 9) K4 विवसा (for व्यसवो) D2 [ऽ]भ्यपेतु, T2 [ऽ]भि' (for नि') — (L 10) K3 भूरितले (for भूमि') V1 B1 4 Dn1 D1-3 4 (by corr) 7 8 T2 सनत (for स्त') D6 कर्णेषु. भिर्भूतले निश्वसंत — T2 om lines 11-12 — (L 11) Dn1 D1 6 8 क्षुद्रेण सिंहेन, Dn1 D3 4 7 सिंहेन क्षुद्रेण (by transp) K1 यथा स्वयूथ्य, K3 V1 Dn1 D1.2 5 'भयूथा (K3 'था), K4 D2 'स्वयूथा, B2 'भयुथ्या (sic), D6 यथा तु नागा, D3 (marg sec m) यथेभयूथा (for यथाभयूथ्या) — (L 13) Ś1 B3 पांचालवर(B5 'रो)ह, B1 Dn1 D1 6 पचाल्वरास् V1 निपेतुस् (for तथान्ये) B. Dn1 D6 T2 तदतरे (for 'रं) — (L. 15) Ś2 K2 B1 3 4 Dn1 D2 6-8 प्रस्कदतो, K6 'दिते, B5 'दयतो, T2 'दिनो (for प्रस्कन्दन्तो) Dn1 बलिना, T2 बलिभि (for 'न) D6 साधुपुरी (for 'मुक्ते) — (L. 16) K2 निहत, D2 निहिना (for 'हता) D8 प्रसज्य (for 'सह्य) — (L 17) B1 जयस (for जय) Dn1 जय मत्वा विपुल वै त्वदीयास् — (L 18) Ś K1 2 4 D3 त(K4 D3 ता)त्मन्नत; K3 तान्नत, V1 तत निजघ्नु, B. तत्राग्निजघ्नत, D6 T2 तथा (T2 'दा) निघ्नन् (for तत्राग्निजघ्नु) K1 नेद्ध (sic), D2 चक्रु (for नेदु) — D3 om lines 19-20 — (L 19) D6 [ऽ]पि (for हि) K3 T2 यशी, K4 यसे, Dn1 यश, D2 यसी (for यशे) — (L 20) B1-3 Dn1 D1.3-5 7 कौरवेंद्र, B5 Dn1 T2 ते विमर्दे (for ते विनेदु) V1 कृष्णेन कर्णाविति कौरवेंद्र, D6 कृष्णौ तु कर्णेन महाविमर्दे ]

T1 G M ins after 33 T2 after the repetition of $33^{cd}$

1068* ततो नवज्यां सुदृढां किरीटी
स्वबाहुविक्षेपणजां प्रगृह्य ।
समाददे गाण्डिवे क्षिप्रकारी
निमेषमात्रेण महाधनुष्मान् ।
ज्याछेदनं ज्याविधानं च तस्य 5]
नैवावबुध्यत्सूतपुत्रो लघुत्वात् ।
पार्थस्य सख्ये द्विपता निहन्तु-
स्तदद्भुतं तत्र बभूव राजन् ।

[(L 1) T1 नवला, G1 धनुर्ज्या, G2 नवां ज्यां (for नवज्यां) T2 ततोच्छिनज्ज्यां सुदृढ किरीटिन — (L. 2) G1 M1 विक्षेपसहां (for विक्षेपणजां) — (L 3) G1 समादधत्, G2 'दधे, M समदधे (for समाददे) T1 G2 गाण्डिव (for 'वे) — (L. 5) T1 G2 ज्याविपन, T2 'महन, M 'यधान (for 'विधान) T2 संरंधे (for तस्य) — (L 6) T1 G2 नैवाबुध्यद्, T2 नैबुध्यत ; G3 नैव्याबुध्यत् (for नैवाव') — G3 om lines 7-8 — (L. 7) G2 M संरंदे (for सख्ये) ]

34 ᵃ) K2 अवधस्य; K6 D2 'वध्य; V1 B3 D3 'मृज्य; B1 'नह्य; B2 अनवित्य; B1 5 D2 4 7 Cn सवनम्य; Dn1 Dn1 D1 5 'नाम्य; D2 'हत्य (for 'धम्य) — ᵇ) B2 D6 तु यान् (for शरान्) K2 D3 (before corr.) विधस्य; D6 विहृत्य, Ca विधम्य (as in text). — For $34^{ab}$, S (T3 missing) subst.

1069* पार्थोऽपि तां ज्यामवधाय तूर्णं
शरासनज्यामाधिरथेर्विधम्य ।

[(L 1) T1 G2 ताम्यान्, T2 तज्यान् (for तां ज्यान्) — (L 2) T2 शरासन (for शरासन-) T2 आधिरथेर्, G2 अति', M अधि' (for आधि') T1 निधम्य, G1 निहत्य, G2.3 विमध्य (for विधम्य) ]

— ᶜ) D2 असरब्ध ; M स (M1 तु) समुद्ध (for सुसंरब्ध) T1 G M कर्णशरै (for कर्णशर ) B1 -विक्षतांगो (for क्षताङ्गो) — ᵈ) S (T3 missing) यो(T2 G2 3 M2 यौ)धान् (for पार्थ ) Dn1 कौरवान्, D3 S (T3 missing) सात्वकान् (for सोम') D1 M1 प्रत्यगृह्णन्; D3 (before corr) 'गृह्णीत, Ca 'गृह्णात् (as in text) — After $34^{cd}$, N T2 ins

1070* ज्यां चानुमृज्याभ्यहनत्तलत्रे
बाणान्धकारं त्वकरोत्क्षणेन ।
शल्यं च कर्णं च कुरूंश्च सर्वा
न्बाणैरविध्यद्युगपत्किरीटी ।

[(L 1) K2 4 चानुसृज्य; V1 D6 T2 चावमृज्य (for चानु') Dn1 D1 5 व्यहनत्, D1 [अ]भ्यवधीद् (for 'हनत्) Ś K2.4 तलेन, K1 मुलेन (sic), K3 D6 8 T2 तलत्रैर्, D2 कलेत्रे (sic) (for तलत्रे) — (L 2) V1 B2-4 Dn1 D1 3, 6-7 बाणांध कारान् (for 'कारं) K3 प्रकरोत्, V1 B Dn1 D1-3 अकरोत् (for त्वक') Dn1 T2 बाणांधकारं सहसा च चक्रे — (L 3) V1 B Dn1 Dn1 D1 3-5 7 transp शल्य and कर्णं Dn1 D3 om, D1 बाणैर् (for सर्वान्) — (L 4) Dn1 प्रसभं, D2 समरे, T2 प्रहसन् (for युगपत्); K3 बाणैरवध्यत्समकिरीटी; D1 अविध्यद्युगपद्रणे किरीटी ]

— D1 (erroneously) reads 8 65 $34^{c}$–8.66 $4^{d}$ after

क्षेपीयसास्त्रेण कृतेऽन्धकारे ॥ ३४
शल्यं च पार्थो दशभिः पृषत्कै-
र्भृशं तनुत्रे प्रहसन्नविध्यत् ।
ततः कर्णं द्वादशभिः सुमुक्तै-
र्विद्ध्वा पुनः सप्तभिरभ्यविध्यत् ॥ ३५
स पार्थबाणासनवेगनुन्नै-
र्दृढाहतः पत्रिभिरुग्रवेगैः ।
विभिन्नगात्रः क्षतजोक्षिताङ्गः
कर्णो बभौ रुद्र इवाततेषुः ॥ ३६
ततस्त्रिभिश्च त्रिदशाधिपोपमं
शरैर्विभेदाधिरथिर्धनंजयम् ।
शरांस्तु पञ्च ज्वलितानिवोरगा-
न्प्रवीरयामास जिघांसुरच्युते ॥ ३७
ते वर्म भित्त्वा पुरुषोत्तमस्य
सुवर्णचित्रं न्यपतन्सुमुक्ताः ।
वेगेन गामाविविशुः सुवेगाः

C 8 4613
B 8. 89 89
K. 8 96 29

8 66 10$^{a b}$ — $^{c}$) Da1 D1 5 त पक्षिण, D2 ते पत्रिण B5 स्नापतन्, Dn1 वभ्रमुरु; D3 प्रापतद् (for संपतन्ति) V1 B D3 मंतरीक्षे T1 नैवापतन्पक्षिणो ह्यंतरिक्षे, T2 G1 M नैवापतत्पक्षिगणो(T2 °णा)तरिक्षे, G3 8 नैवापतत्पक्षिरुहा(G3 °गणो)प्यंतरिक्षे — $^{f}$) Dn1 तदा महास्त्रेण; D2 पार्थेन शस्त्रैश्च, S (T3 missing) पार्थेन चास्त्रेण (for क्षेपीयसा°) Ca c. cite क्षेपीयसा (as in text) K8 B1 4 5 Da1 D2–7 T2 G2 M1 कृतान्धकारे — After 34, N T2 ins.

1071* वायुर्वियत्स्थैरमरैं समेत्य
व्युवाह बाणानवलोकयद्भिः ।

[(L. 1) Ś1 K1.2 4 वायोर् Ś2 वियत्स्थैर्, K8 विमानस्थैर्, D2 वियत्स्थैर् (sic), T2 वियस्थैश् (for °त्स्थैर्) T2 च सुरैं (for अमरैं) Dn1 D2 6 आयुर्वियत्स्थैर्(D3 °र्वा)रितो भृतसधै, D1 वायुर्विय स्थैर् समेत्य प्र (sic) — (L. 2) Ś K1 2 4 बुवाह, T2 व्यपोह, Ca c व्युवाह (as above) K8 व्युवाह यानेन च लोकयद्भि°, Dn1 D2 6 उवाह दिव्य (D3 °स्य) सुरभि-(D6 °भी)स्त्वगनीं ]

35 For sequence in D1, cf. v. l. 34 D2 om 35$^{a b}$ — $^{a}$) V1 B2 शल्यस, D3 8 T1 G2 3 M1 शल्यं तु, G1 M1 कर्णं तु (for शल्यं च) D3 8 (marg) नवभि (for दश°) Ś2 K2 पृषट्कैर्, K1 पृषकैर्; K3 D3 पृषत्कैर, K4 प्रपत्कैर्, S (T3 missing) निमेषाद् (for पृषत्कैर्) — $^{b}$) K3 तुत्रे (sic), V1 B2 तनुत्र, G1 तु नेत्रं — $^{c}$) K3 D2 सुयुक्तैर्, Dn1 समुक्तैर्, D4 (marg) सुप्रमुक्तैर्, D3 तु सुक्तैर्, T2 G2 3 पृषत्कैर् — $^{d}$) B1 Da1 D1 2 5 6 3 T1 G M अभ्यविध्यत् (for अभ्य°)

36 For sequence in D1, cf. v. l. 34 — $^{a}$) B1.2.3 -बाणाशनि-, B4 D3 -बाणाशन; D4 (by corr) -बाणाशुने- (sic) (for -बाणासन-) K1 -वस्र-वेगैर् (sic), K2 B1 -वेगनुत्त- (B1 °न्नो), V1 Dn1 D2 -वेगमुक्तैर् (for -वेगनुन्नैर्) — $^{c}$) G1 M1 विभिन्नगात्र-; G2 प्रभिन्नगात्र- K8 D8 क्षतजोषि(D8 °क्ष)तांग-, B1 °जोक्षितांग — D6 reads 36$^{d}$ after 1072* — $^{d}$) K8 D2 इवाततेषु, D8 (marg as in text) इवाच्युतेषु, T2 G1 M2–4 इवांतकाले (for इवाततेषु) Ca cites आततेषु (as in text) — After 36, K4 V1 B D (except D1 8) ins.

1072* प्रक्रीडमानोऽस्य श्मशानमध्ये
रौद्रे मुहूर्ते रुधिरार्द्रगात्र ।

[(L 1) K4 V1 Da1 D1.3–5 7 प्रक्रीडमानेव, B1 °मानेन, B2 °मातग, B4 D6 °मानश्च, B5 °मानोव (for °मानोऽस्य). K4 Dn1 श्मशानमध्ये ]

— After the above, D6 reads 36$^{d}$

37 For sequence in D1, cf. v. l. 34. — $^{a}$) K8 V1 B Da1 Dn1 D1–7 S (T3 missing) त (for च) D8 ततस्त्रिभिस्त त्रिदशोपम शरै — $^{b}$) D3 मृशं (for शरैर्) T2 G [अ]तिरथि(G1 °थि)र् (for [आ]धि°) — $^{c}$) D1 8 शराश् B D (except D2 8) S (T3 missing) च (for तु) B2 रुषितान्, T2 [अ]ज्वलिकान् (for ज्वलितान्) G1 ज्वलनानिलोरगान्, G2 ज्वलतोभिवेगान् — $^{d}$) K3 T1.2 G1 3 M1 प्रवेशयामास, Da1 D1 5 8 Ca प्रवेर°, Cap प्रावेर° (for प्रवीर°) K4 प्रवेदयामासु जयासुरच्युत, V1 B1 Dn1 प्रवेशयामास जिवासयाच्युत, B2–5 D2–4 6 7 G2 M2–4 प्रवेश(B4 प्रवार-, B5 D4 प्रवेर, D3 स प्रेष, G2 प्रयोज)यामास जिवासुरच्युत (M2–4 °तौ)

38 For sequence in D1, cf. v. l. 34. — $^{a}$) K4 om ते वर्म S (T3 missing) सुवर्णचित्र पुरुषोत्तमस्य — $^{b}$) K3 B D (except D6) सुवर्णचित्रा (for °चित्र) K3 [अ]भ्यपतन्, K4 B1 2 4 Da1 D1.3–5 7 ह्य(K4 नि)प° (for न्यप°) T1 भित्त्वा च वर्मण्यपतन्सुपुस्ता, T2 ते वर्म भित्त्वा न्यपतन्सुपुस्ता, G M वर्माय (G1 °व-) भित्त्वा न्यपतन्सुपुंखा — $^{c}$) B2 सुवेग, D6 सवेगा S (T3 missing) वेगेन गां ते विविशुश्च राजन् Ca.c cite गां (as in text) — $^{d}$) D6 त्यक्त्वा, Ca स्नात्वा (as in

स्नात्वा च कर्णाभिमुखाः प्रतीयुः ॥ ३८

तान्पञ्चभल्लैस्त्वरितैः सुमुक्तै-
स्त्रिधा त्रिधैकैकमथोचकर्त ।
धनंजयस्ते न्यपतन्पृथिव्यां
महाहयस्तक्षकपुत्रपक्षाः ॥ ३९

ततः प्रजज्वाल किरीटमाली
क्रोधेन कक्षं प्रदहन्निवाग्निः ।
स कर्णमाकर्णविकृष्टसृष्टैः
शरैः शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविध्यत्स चचाल दुःखा-
द्धैर्यात्तु तस्थावतिमात्रधैर्यः ॥ ४०

ततः शरौघैः प्रदिशो दिशश्च
रविप्रभा कर्णरथश्च राजन् ।
अदृश्य आसीत्कुपिते धनंजये
तुषारनीहारवृतं यथा नभः ॥ ४१

स चक्ररक्षानथ पादरक्षा-
न्पुरःसरान्पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्ना-

---

text) M4 om from च up to तान् (in $39^{a}$) M1 तु (for च) B2.3 Dn1 D2 कर्णाद्भिमुखा (for °भिमुखा) 

39 For sequence in D1, cf v l. 34 M4 om. तान् (cf. v l 38) — a) V1 B (except B5) Da1 Dn1 D1.3–5.7 S (T3 missing) ददामि (for त्वरितै) B3 D4 सुयुक्तैस् (for °मुक्तैस्) — b) K4 त्रिधास; G2 द्विधा, M1 विक्षा (for the first त्रिधा) V1 [ए]नैकम् (for [ए]कै°) — c) V1 Dn1 धनजयास्तैर् (for °जयस्ते) B2 व्यपतन्, B5 [ऽ]भ्य°; G3 M1.3 न्यपतत् — d) Ś K1.2.4 महाभय, K3 °जवास; B1 °भयस् (for °हयस्) K3 B1 -पत्रपक्षा ; D3 (marg as in text) -पुत्रकक्ष्या (for -पुत्रपक्षा ) Ca.o cite तक्षकपुत्र° and पक्ष S (T3 missing) यथा (M1 इवा ) हयास्ताक्ष्यसुतेन (G1 °सुरेन) कृत्ता

40 For sequence in D1, cf v l 34. — a) G1 तथा (for तत ) — M4 om $40^{b}$ — b) Ś K1.2.4 कक्ष्यं, K3 om ; Ca कक्ष (as in text) Ś1 प्रवहन् (for प्रद°) — After $40^{ab}$, N ins

1073* तथा विनुन्नाङ्गमवेक्ष्य कृष्ण
सर्पेषुभि कर्णभुजप्रसृष्टै ।

[(L 1) Ś K1.2.4 विमुन्नांगन्, K3 तु नुन्नांगन्, V1 B1.3–5 Da1 D1.5 वितुन्नांगम्, B2 D6 विभि° (for विनु°). — (L. 2) K3 Dn1 D1.6.7 सर्वेषुभि°, Ca सर्पे° (as above) K3 कर्णमुज (for कर्णभुज-) ]

— c) B2 सु- (for स) K3 -निकृष्टमुग्रै ; B4 Da1 D1.4.5.7.8 Ca -निकृ(D7 °घृ)ष्टसृष्टै , D3 M1 -निसृष्ट° (for -विकृष्ट°) D6 स कर्णमाकृष्य सकृत्प्रसृष्टै ❀Ca स्थिरीकृत्य धनुष प्रेरण त्रिकृष्टम् ।❀ — d) K3 V1 B3 Da1 D1.5.8 शरीरार्तिकरैर्; T2 °रामिदुरैर्, G M °रातिद(G1 °त)रैर् (for °रान्तकरैर्) — e) G3 [अ]भिद्यत् (for [अ]विध्यत्) — f) B3.4 D7 T2 धैर्याच, B5 ततस्तु (for धैर्यात्तु) Dn1 दैवादवातिष्ठत धैर्यबुद्धि , D8 धैर्यात्वतस्थाविमात्रधैर्य (sic) — After 40, S (T3 missing) ins

1074* प्रादुश्चकाराथ शरान्महात्मा
देहं विभिन्दन्निव सूतजस्य ।
शरास्तु ते काञ्चनचित्रपुङ्खा
संपेतुरुर्व्यां शतशो महान्त ।

[(L 1) T1 [आ]नु (for [म]त) — (L. 2) T1 विभिद्य, G1 वितन्वन्, M1–3 विभु° (for विभि°) — (L. 4) M2–4 उग्रा (for उर्व्यां) ]

41 For sequence in D1, cf. v l 34 — a) Ś1 शरौघ°; D5 शरास्तै — b) V1 रवि प्रभा, B3.4 Da1 D1.3.5.7 G1.2 रवि(B3 °व)प्रभा ; B1.2 Dn1 D3 रवे प्रभा (B3 °भा°), D4 रविप्रभै°; D5 T1 °प्रभां; T2 M °प्रभ ; G1 °प्रकाशे (for °प्रभा) D5 कर्णरथन्त; T1 G3 (before corr ) °रथं च; G1 °धरश्च (for °रथश्च) — c) K3 अदृश्यमाने, K4 V1 B1.2.4 Dn1 D1.6.7 °दृश्यमासीत् T2 अदृश्य आसीत्महमा सूतपुत्रस — d) B5 -कृतं; Ca -वृतं (as in text) D5 -वृतो यथा नग ; S (T3 missing) -वृतो गिरि(T2 रवि)र्यथा (for वृतं यथा नभ°)

42 For sequence in D1, cf v l. 34 — a) B2 धर्मरक्षान् (for चक्र°) K3 सह पार्श्वरक्षान् (for अथ पाद°) S (T3 missing) स चक्ररक्षा अ(T2 G1 M2 °क्षाव)पि पृष्ठगोपा — b) D4 पुन स तान्; D7 पुरश्चरान् (for पुर सरान्) S (T3 missing) कर्णस्य ये चापि पुरसराश्च — After $42^{ab}$, S (T3 missing) ins

1075* भीता द्रवन्ति स्म निहन्यमाना
महेषुभि पार्थकरप्रणुन्नै ।
ततोऽर्जुनो वै भरतप्रवीरो
महानुभाव समरे निहन्ता ।

[(L 2) G1 प्रयुक्ते , G3 प्रयुक्ते (for प्रणुन्नै°) — (L 3) M1 -प्रवीरान् (for -प्रवीरो) — (L. 4) T2 समरेषु हता ]

— c) K3 V1 B1.2.4 Da1 D1.4.5 दुर्योधनस्य; S (T3 missing) सुयोधनेन (for दुर्यो°) Ś K1.2.4 अनुमितान्, D6.8 (marg ) °गतान्; D8 °गता (for °मतान्) V1 B1.4 Da1 D1.3–5.7 मरिघ्नान्, B5 Dn1 D2.6.8 T2 अरिघ्न°; T1 अरीन्घ्नन्; G विनिघ्नन् (for अरिघ्नान्) — d) K3 V1

न्समुच्चितान्सुरथान्सारभूतान् ॥ ४२
द्विसाहस्रान्समरे सव्यसाची
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथाश्वसूता-
न्निनाय राजन्क्षयमेकवीरः ॥ ४३
अथापलायन्त विहाय कर्णं
तवात्मजाः कुरवश्चावशिष्टाः ।
हतानवाकीर्य शरक्षतांश्च
लालप्यमानांस्तनयान्पितॄंश्च ॥ ४४
स सर्वतः प्रेक्ष्य दिशो विशून्या
भयावदीर्णैः कुरुभिर्विहीनः ।
न विव्यथे भारत तत्र कर्णः
प्रतीपमेवार्जुनमभ्यधावत् ॥ ४५

C 8. 4621
B 8. 29 97
K 8. 96 41,

इति श्रीमहाभारते कर्णपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

B1–4 Da1 D3 5 6 S (T3 missing) समुच्छ्रितान्, K4 B5 D1 4 °स्थितान्, Dn1 D2 7 °यतान्, D8 समाच्छिनत्, Ca समुचितान् Ś2 K4 Dn1 D2 S (T3 missing) सरथान्; V1 B (except B5) Da1 D1 3–5 7 रथिन, D8 सारथान् (for सुरथान्) K3 सर्वभूतान्, D2 साश्वसूतान्, D8 (marg) सायुधीयान् (for सारभूतान्)

43 For sequence in D1, cf v 1. 34 K3 om (? hapl.) 43[abc]. D6 om 43 — a) B2 om समरे D8 सत्यसाची (for सव्य°) S (T3 missing) गांडीवधन्वा द्विगुणं सहस्र — b) D7 T2 वृषभ (for ऋ°) — c) D3 स्वरथाश्व-, D8 च रथाश्च; S (T3 missing) सरथान्स- (for सरथाश्व-) — d) D8 क्षपाम् (for क्षयम्). D7 एव धीर (for एकवीर)

44 For sequence in D1, cf v 1 34 — a) B1. 2 4 Da1 D1. 5 8 T1 G2 3 M अयो पलायत, B5 Dn1 D3 4 6. 7 T2 सतोप° (for अथाप°) — T2 om (hapl.) from 44[b] up to line 8 of 1076* — b) Dn1 ये (for च) K3 [अ]वसिष्टा T1 G M तवात्मजा ये कुरवश्च शिष्टा — c) Dn1 D2 अपाकीर्य (for अवा°) B1. 4 D3 4 7 शरै°, M1 शरां (for शर-) — d) D2 लालप्यमाजस्, T1 विलपमानांस्; G M विलप्य° (for लालप्य°) G2 3 विमृद्नन् (for पितॄंश्च) — After 44, S (T3 missing, T2 om. lines 1–8) ins.

1076* सर्वे प्रणेशु कुरवो विहीना
पार्थेषुभि सपरितप्यमाना ।
सुयोधनेनाथ पुनर्वरिष्ठा
प्रचोदिता कर्णरथानुयाने ।
भो क्षत्रिया शूरतमाश्च सर्वे [5]
क्षात्रे च धर्मे निरता स्थ यूयम् ।
न युक्तरूपं भवतां समीपा-
त्पलायन कर्णमभिप्रहाय ।
तवात्मजेनापि तथोच्यमाना
पार्थेषुभि सपरितप्यमाना । [10]
नैवात्रतिष्ठन्त भयाद्विवर्णा
क्षणेन नष्टा प्रदिशो दिशश्च ।

[(L 1) G1 न शेकु, G2 3 प्रणेदु (for °शु) G1 विभग्ना, M2–4 विभिन्ना (for विहीना) — (L 2) G2 3 पार्थेन सर्वे परितप्यमाना — (L. 3) T1 [अ]च (for [अ]थ) G1 विशिष्टा (for वरिष्ठा) — (L 5) G1 3 तु, M स्थ (for च) — (L 6) T1 च (for स्थ) — (L 7) G2 न युक्तरूपं स्वसमीपाच्च सर्वे — (L. 8) G2 पलायतां (for °यन) G1 अतिप्रहाय, G3 इति प्रहाय, M1 अभिप्रजह्य (for अभिप्रहाय) M2–4 पलायन कर्णरथ प्रजह्य — (11) G1 सुदीर्णा, G2 विदीर्णा, M2–4 उदीर्णा (for विवर्णा°) — (L. 12) G2 जुष्टा (for नष्टा)]

45 For sequence in D1, cf. v 1 34 — a) B2 सर्व- (for प्रेक्ष्य) K3 G3 दिशोति (G3 °पि) शून्या, T2 विदीर्णपक्षा (for दिशो विशून्या) — b) K3 T2 भयाद्विदीर्णैं; K4 D6 G1 °वदीर्णे, V1 Da1 D1 5 °वकीर्णैं, T1 G2 3 M °वतीर्णं (for °वदीर्णैं) K1 Dn1 D5 विहीना, T2 प्रहीण — c) B5 भारतमेव (for भारत तत्र) — After 45[c], T2 ins

1077* महारथ सूतपुत्रस्तथापि ।

— d) Dn1 प्रहृष्ट; G2 प्रदीपम्; Ca प्रतीपे (for प्रतीपम्) D1 4 अभ्यधावन्

Colophon missing in T3, om. in G2 — *Day of Karṇa's Generalship* Ś K2 द्वितीये (Ś2 °य-) युद्धदिवसे — *Adhy name* D2 युधिष्ठिरागमन; T2 कर्णार्जुनयुद्धं, M3 द्वैरथे कर्णपलायनं — *Adhy no* (figures, words or both) Ś1 (*sec m*) 83, Ś2 66, B1 87, B3 76, B4 96, B5 90, Da1 99, D4 69, D6 88, T1 G3 M1 4 106, T2 98, G1 M2 3 105

# ६६

संजय उवाच ।

ततोऽपयाताः शरपातमात्र-
मवस्थिताः कुरवो भिन्नसेनाः ।
विद्युत्प्रकाशं ददृशुः समन्ता-
द्धनंजयास्त्रं समुदीर्यमाणम् ॥ १

तदर्जुनास्त्रं ग्रसते स्म वीरा-
न्वियत्तथाकाशमनन्तघोषम् ।
क्रुद्धेन पार्थेन तदाशु सृष्टं
वधाय कर्णस्य महाविमर्दे ॥ २

रामादुपात्तेन महामहिम्ना
आथर्वणेनारिविनाशनेन ।
तदर्जुनास्त्रं व्यधमद्दहन्तं
पार्थं च बाणैर्निशितैर्निजघ्ने ॥ ३

ततो विमर्दः सुमहान्बभूव

## 66

☞ T3 is missing in this adhy (cf v l. 8 60 32)

1 For sequence in D1, cf. v l. 8 65 34. — a) Dn1 प्रयाता, G2 [ऽ]पयाता (for ऽपयाता) — b) D6 8 व्यवस्थिता S (T3 missing) वै कुरवो (M1 कुरवो वै) नरेंद्र (for कुरवो भिन्नसेना) D2 भिन्नदेहा; D5 °सैन्या (for °सेना) — c) B3 वैद्युत्प्रकाशं D8 समेताद्

2 For sequence in D1, cf. v l. 1 — a) D5 ततोर्जुनास्त्र V1 B D (except D8) अमति. B3 वीर, Dn1 D6 कर्णो (for वीरान्) S (T3 missing) ततोग्रमत्सूतपुत्रोर्जुनस्य — b) K3 V1 B Dn1 D1-..7 8 कृत्स्नं तदा (for वियत्तथा) K3 इवात्तघोषं, B3 अनतकोपं Dn1 S वियद्दव घोरतरं शरैस्तत् (Dn1 °स्त्रं); D6 क्षिप्रं तदा तारतमं शरौघै — c) K3 V1 B D सृष्टामिस(D8 °त्रुषि)ष्टं, S (T3 missing) सृष्टं (G1 3 शर) विसृष्टं (for तदाशु सृष्टं) — d) G2 कर्णस्तु K1 महाविदर्मे; M1 °न्विमर्दे. — After 2, N T2 ins.

1078* कर्णं सुघोरेष्वसनं दृढज्यं
विस्फारयित्वा विसृजञ्छरांस्तान् ।
उदीर्यमाणं स कुरून्दहन्त
सुवर्णपुङ्खैरिषुभिर्महात्मा ।

[(L 1) K3 च (for सु-). V1 B1-4 Da1 D1-5 7 8 सुघोपेष्वसन, Dn1 त्वमोघे° (for सुघोरे°) D3 दृढम्व (sic), D8 (before corr) दृढत्व (for °ज्य) D5 कर्णं सुघोरे ष्वसन दृढत्व, T2 कौन्तेयमोघान्प्रसम दृढज्यां — (L. 2) T2 विस्फारयित्वा K3 B D7 व्य(B3 वि)सृजच् (for विसृजञ्) — V1 B1.8 Da1 D1 5 T2 om. lines 3-4. B6 Dn1 D2 6 8 transp lines 3 and 4. — (L. 3) D2 उदीर्यमाणत् B5 D4 8 च, D2 तु, D3 न (for स). D4 रिपून् (for कुरून्) Ś2 K1 2 4 न(Ś2 ट)हांत, D8 दहंस्तत् (for दहन्त). — (L 4) Dn1 विशिखैर्विमर्दे (for इषुभिर्महात्मा).]

3 For sequence in D1, cf. v l. 1 — a) B5 रामाद्ग्वाहेन (for °दुपात्तेन) M1 महानहिम्न — b) N T1.2 G1 M4 ह्या(D3 T1 M4 ह्य)-थर्वणेन V1 B1.2.4 Da1 D1 2-5 7 -विदारणेन (for -विनाशनेन) — Ś K om. 3cd — c) G2 तथा, M1 ततो, M2-4 तदा (for तद्). D3 4 विधमन् (for व्यधमद्) D2 8 तदा महास्त्र कुरूना-दहत, D6 तदा महास्त्रं स कुरून्दहंतं — d) S (T3 missing) अविध्यत् (for निजघ्ने) Dn1 कर्णं तु बाणैर्निशितैर्महात्मा; D2 8 चिच्छेद पार्थस्य ततो महात्मा; D5 सुवर्णपुङ्खैरिषुभिर्महात्मा (= line 4 of 1078*)

4 For sequence in D1, cf. v l. 1 — a) Ś K1.2 4 तथा (for ततो) D3 तु, D8 च (for सु-). — b) Ś2 K2 V B D तत्रार्जुनस्य, S (T3 missing) धनंजयस्य Ś2 [अ]थिरये, T2 G [अ]थिरयेऽ T2 महात्मन् (for च राजन्) — c) K3 आसाद्यत; D1 आच्छादयतो, T1 G1 2 M आवावत(T1 M1 °य)तो; T2 आवावरतं, G3 आयातवतो Ś2 K2 पृषत्कैर् — d) T1 G1.2 विषाणपातैर् (for °घातैर्) T2 गजयोर् (for द्विपयोर्) S (T3 missing) इवाजौ (for इवोग्रै). — After 4, K4 B2 5 Dn1 D2.6 8 S (T3 missing) ins..

1079* ततोऽस्त्रसंघातसमावृतं तदा
बभूव राजस्तुमुलं रणाजिरम् ।
तत्कर्णपार्थौ शरवृष्टिसंघै-
र्निरन्तरं चक्रतुरम्बरं तदा ।
उद्बाणजालैकमयं महास्त्र [5]
सर्वेऽपश्यत कुरवः सोमकाश्च ।
नान्यं च भूत ददृशुस्तदा ते
बाणान्धकारे तुमुले च तस्मिन् ।

[(L 1) Dn1 D2.6 तत्र (for ततो) B5 -सघेश्च (for -संघात-). B2 तु (for तदा). — (L 2) Dn1 स स्वंत; G2 सुदारुणं (for रणाजिरम्). K4 B2.5 D2.6 8 बभूव दिक्ष महदम्बरास्तर — (L. 3) K4 B2 8 D2 5 6 शरवाष्ट्या

तस्यार्जुनस्याधिरथेश्च राजन् ।
अन्योन्यमासादयतोः पृषत्कै-
र्विषाणघातैर्द्विपयोरिवोग्रैः ॥ ४
ततो रिपुघ्नं समधत्त कर्णः
सुसंशितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं संयति सुप्रधौतं
पार्थार्थमत्यर्थचिराय गुप्तम् ॥ ५
सदार्चितं चन्दनचूर्णशायिनं
सुवर्णनालीशयनं महाविषम् ।
प्रदीप्तमैरावतवंशसंभवं

C 8 4643
B 8 90. 22
K. 8 97 22

(for °वृष्टिर्ववृषे) — (L. 4) K4 B1 3 D1 c 3 ज्वलित (for अन्तर नदा) — (L 5) B5 महांत (for महास्त). B2 D2 तद्दाना... सुनदद्दिन्त (D5 °सुक्त), D1 तद्दा ... सुनदत्सुर्गे, D2 ते पा ... महांत, S (T3 missing) तम्रो महासाय महान्ते — (L 6) D2 तदा दुत (sic) (for नमेंऽत्रासु). S (T3 missing) नाम हि सर्वे (T1 G2 M2.4 °पं) दृष्टुसुर्नेता — (L 7) D2 संवदद्दे (for तदा ते). K4 नागाकुल दद्दशु नन्दाते, B2 D3 नन्दालिविह्-(D3 °कुल द)द्दशु संवदद्दे, B. D3 द(D3 ना)नकुल दद्दशु पतद्दे, S (T3 missing) नान्यिद्य भू(T2 °न्तद्रू)न दद्दशे पतद्दे — (L. 8) D2 om., T1 2 G तु; M स (for च) K4 सनद्दने, Dn1 [s]त सिंचित (for च तस्मिन)]

A passage given in App I (No. 39) is ins in K4 B1 5 Dn1 D2 c 8 after 1079*, in V1 Da1 D1.5 after line 20 of App I (No 40), in B1 after st 4, in T1.3 after 1080*, whereas V1 B1 3 Da1 D1 3-5 7 ins a passage given in App I (No 40) after st 4 On the other hand, T1 2 G M cont after 1079*

1080* ततस्तु तौ वै पुरुषप्रवीरौ
राजन्वरौ सर्वधनुर्धराणाम् ।
त्यक्त्वा मदेहौ मनसेऽतिघोरे
प्रासमानौ दाशुदुरासदौ हि ।
दृष्ट्वा तु तौ संप्रति संप्रयुक्तौ [5]
परस्परं छिद्रनिविष्टदृष्टी ।
देवर्षिगन्धर्वगणा सयक्षा
मन्दुष्टुवुस्तौ पितरश्च हृष्टा ।

Colophon

[(L 1) M3 4 दृष्ट्वा (for ततस्तु) — (L 3) T3 महांतौ (for इतिघोरे). — (L. 4) G2 मधुदुराना — (L 5) T3 हि (for तु). T1 G संदति (for संप्रति). G2 3 मप्रयुत्तौ (for °युक्तौ) — (L. 6) M परस्पर... — (L 7) G2 -नरा (for -गणा). T1 स्मय (for सयक्षा) — (L 8) T2 तु- (for च). G1 तुष्टा (for हृष्टा) — Colophon. *Adhy name* M1 कर्णार्जुनप्रयुक्ता — *Adhy no* T1 M3 4 107, G2 M3 106]

5 Before 5, S (T3 missing) ins. संजय — [a]) K1 4 समदच; K3 समधान्न, D2 सरसंध (sic) (for समधत्त) — [b]) K3 सुसंचित, V1 D4 °शसित; Dn1 °सचित, D2 °सशितं, D3 °शशित, D3 G1 3 M4 °सहितं, (for °सहित) Da1 D1 5 G2 सर्वमुख — T1 om. 5[c] — [c]) B. D3 सप्रति, G2 संयदि (for संयति) K3 सुप्रधूत (for °धौत) B3 Dn1 D5 रौद्रं शर मनत सुप्रधौतं — [d]) K1 2 4 अत्यर्च्य°, S (T3 missing) इत्येव (for अत्यर्थं) V1 B (except B1) Dn1 D2-4 7 8 T2 G1 M -चिराभिगुप्तं (for -चिराय गु°) K3 पार्थार्थमभ्यर्च्य चिराभिगुप्त.

6 [a]) B1 समर्चित (for सदा°) K3 चंदनचूर्णशायतं; V1 °चूर्णचूर्णं, Dn1 D6 8 °चू(D3 °पू)र्णशायित, S (T3 missing) °चू(G2 °पू)र्णदिग्ध — [b]) Ś2 सुवर्णनाडी-शयन, B. °नाल शयन, Dn1 D5 °तूणीरशय (for °नाली-शयन) Dn1 महार्चित, G M1 पुराण, M2-4 पुरातन (for महाविषम्) — After 6[ab], K4 V1 B D (except D2 8) S (T3 missing) ins.

1081* आकर्णपूर्णं प्रविकृष्य कर्णो
पार्थोन्मुख सदधे विगमन्युम् ।

[(L. 1) B1 . प्रतिकृष्य, Dn1 च वि°, S (T3 missing) प्र-(T3 G1.3 M1 वि)कर्ष (for प्रविकृष्य) — (L 2) B2 Dn1 पार्थोन्मुख. B1 संप्रदधे (for संदधे) B2 . D6 विग्न(B3 °प्र)मन्यु, Dn1 D1 चोचनीजा, D1 (marg) विग्नवेगा S (T3 missing) विनोकुकान शरमुग्रवेग (M °हेन्न).]

— [c]) K3 -वंशमुद्भव, D3 -दंतसभव, S (except M3, T3 missing, M3 damaged) -नागपुत्र (for -वशसभवं) — After 6[c], T1 ins

1082* मुमोच शीघ्रं स रिपुप्रमाथी ।

— [d]) K3 B5 D3 G M1.3 4 जिह्वीर्षन् (for °पुर्द) Dn1 M2 युधि सव्यसाचिन, T1 2 G1 2 M1.3 4 भरतर्षभस्य, G3 युधि भारतस्य (for °धि फल्गुनस्य) Some MSS फाल्गुनस्य — After 6, K4 V1 B D (except D2 8) S (T3 missing) ins

1083* तत प्रजज्वाल दिशो नभश्च
उल्काश्च घोरा सहसा निपेतु ।
तस्मिंस्तु नागे धनुषि प्रयुक्ते
हाहाकृता सर्वलोका सशक्रा ।

[D3 reads lines 1-2 after line 3. — (L 1) S (except T2, T3 missing) transp. दिश and नभ-

शिरो जिहीर्षुर्युधि फल्गुनस्य ॥ ६
तमब्रवीन्मद्रराजो महात्मा
वैकर्तनं प्रेक्ष्य हि संहितेषुम् ।
न कर्ण ग्रीवामिषुरेष प्राप्स्यते
संलक्ष्य संधत्स्व शरं शिरोघ्नम् ॥ ७
अथाब्रवीत्क्रोधसंरक्तनेत्रः
कर्णः शल्यं संधितेषुः प्रसह्य ।
न संधत्ते द्विः शरं शल्य कर्णो
न मादृशाः शाठ्ययुक्ता भवन्ति ॥ ८
तथैवमुक्त्वा विससर्ज तं शरं
बलाहकं वर्षघनाभिपूजितम् ।
हतोऽसि वै फल्गुन इत्यवोच-

— (L. 2) D4 स्व (for च) B2 घोराशनयो K4 B1 3-5 Da1 D1 3 5.7 घ्नशनी(K4 D3.7 °नि)र् ; V1 अशनिर्, Dn1 शतस , D4 नभस (for सहसा) Dn1 प्रपेतु — (L 3) B5 च, D5 स्रु- (for स्रु) K4 वाणैर्, G1 घोरे (for नागे) Da1 D1 5 प्रमुक्ते, G2 प्रसक्ते (for प्रयुक्ते) — (L 4) Dn1 D5 लोकपाला , D4 S (T3 missing) देवगणा (for सर्वलोका ) K4 V1 B1.2 4 D3 7 सशोका , D4 समस्ता , M2-4 समेता (for सशक्रा ) ]

K4 V1 B Da1 Dn1 D1.3-5 7 T2 cont

1084* न चापि तं बुबुधे सूतपुत्रो
बाणे प्रविष्टं योगबलेन नागम् ।
[(L 2) B2 रणे, D4 बाण (for बाणे) ]

Dn1 T2 cont

1085* दशशतनयनोऽहिं दृश्य बाणे प्रविष्टं
निहत इति सुतो मे स्रस्तगात्रो बभूव ।
जलजकुसुमयोनि श्रेष्ठभावोऽजितात्मा
त्रिदशपतिमवोचन्मा व्यथिष्ठा जये श्री. ।
[(L 1) T2 सदृश्य (for ऽहिं दृ°) — (L 2) T2 न हि न हि च (for निहत इति) — (L 3) T2 कमलकुसुमयोनिर्लोकनाथो महात्मा — (L 4) T2 जयश्री ]

On the other hand, D5 T1 G M cont. after 1083* T2 after 1085*

1086* स सूतपुत्रस्तमपाङ्गदेशे
अवाङ्मुखस्त सधयति स्म रोषात् ।
न तं स्म जानाति महानुभाव-
मपाङ्गदेशाभिनिविष्टमाजौ ।
[D7 om lines 1-2 — (L 2) T1 पार्थोन्मुख संनयति स रोपाद्, T2 ह्यवाङ्मुख संदधति स रो° — (L. 3) G3 वे स, M1 तस्य (for त स) T1 G3 M1 महानुभाव D7 न त स जानाति महानुभावम् — (L 4) T1 ह्यपांग- (for अपाङ्ग-) D7 T2 G2 -देशेभि ; T1 -देशे हि (for -देशाभि ) ]

7 D4 reads 7-8 after 20 — [a]) V1 B1.2 4 Da1 Dn1 D1.3-5 7 ततो (for तम्) — [b]) Ś K1 2 V1 B4 Da1 D1-3 5 7 सधि(V1 °ह)तेषु, K4 ** तेषुं, B1 सहितेषु (for संहितेषुम्) Dn1 दृष्ट्वा कर्णं प्रहितेषु तमुग्रं; D4 वैकर्तन स्वं हननीयमध्यो (sic), D5 T2 G1 M °न सधि- (D5 °ह-; T2 G1 °हि)तबाणमीक्ष्य, D3 °नं प्रेक्ष्य हि संजिहीर्षुं; T1 G2 3 °नं संधु(T1 °ह)तबाणमाजौ — [c]) D5 शत्रु- (for कर्ण). Ś2 K1 [ए]षु (sic), D7 [ए]षम् (for [ए]ष) K3 V1 B2 3 5 Dn1 D5 3 T2 लप्स्य( D3 °क्ष्य)ते, Da1 D1 5 प्राप्यते, D4 लब्धवान्; D7 आप्स्यते (for प्राप्स्यते) T1 G M ग्रीवा यत कर्ण न संधि- (G °हि)तोय — [d]) B2 5 Dn1 D1 6 S (T3 missing) समीक्ष्य (for संलक्ष्य). B1 4 transp संलक्ष्य and संधत्स्व D1 शरां; D4 पुन ; D3 om. (for शर) D1 शिरार्स्त, D4 शर त्व; T1 M2-4 रिपुघ्न; T2 G M1 परघ्नं (for शिरोघ्नम्)

8 For sequence in D4, cf v 1 7 — [a]) D4 स चाब्रवीत्क्रोधविवृत्तनेत्र', S (T3 missing) तमब्रवीत्क्रोधविदीप्त°. — [b]) K3 चाल्पं (for शल्य). D2 3 सहितेषु D3 प्रसज्य (for °सह्य) Dn1 D4 6 S (T3 missing) मद्राधिपं सूतपुत्रो मन(Dn1 D4 6 °त्रस्त)स्वी — [b]) D4 सद(marg °ह)धे (for संधत्ते) K3 द्विशर — [d]) K3 न यादृशा , Dn1 समादृशा (sic) (for न मा°) K3 V1 B1 2 4 5 Da1 D1 5 7 Ca शठयुद्धा, B3 Dn1 D5 जिह्मयुद्धा, D2 शतशल्या, D3 शतयुद्धा, D4 युद्धजिह्मा, D3 शठमुद्धा (sic), S (T3 missing) युद्धशठा ( T1 °शौंडा; T2 °तुच्छा) (for शाठ्ययुक्ता) — After 8, D4 ins

1087* प्रासस्य पार्थं प्रणता स्व स्वाहा
संस्थाप्य कृष्णेन पुनस्तदीयम् (sic) ।

9 [a]) K3 V1 B Da1 D1-3 5 7 3 तथैव चोक्त्वा , Dn1 D5 इतीदमुक्त्वा, D4 क्रोधनकर्णो (sic), S (T3 missing) तथोक्तवाक्यो (for तथैवमुक्त्वा) — [b]) K2 बलाहवे (sic), Da1 Dn1 D1 4-6 S (T3 missing) प्रयत्नतो; Ca c बलाहकं (as in text) K1 3 V B D S (T3 missing) वर्ष(T2 देव)गणाभिपूजितं (Dn1 °जन) — [c]) D5 3 रे, S (T3 missing) हे (for वै) Some MSS फाल्गुन; K3 D4 फाल्गुनम् Ś1 K1 2 4 B2 3 इत्यवोचम्; Dn1 °त्यधिक्रमं; D1 3 °त्यवोचन्, D4 °त्युवाच; D5 S (T3 missing) °त्यविक्रुव (for °त्यवोचत्) — [d]) Ś1 K2 B5 स्वरघ्न(B5 °घ्नु)र्जितम्; K1 स्वरस्वार्जितम्; K3 स्वरजितम्;

ततस्त्वरञ्जर्जितमुत्ससर्ज ॥ ९
संधीयमानं भुजगं दृष्ट्वा कर्णेन माधवः ।
आक्रम्य स्यन्दनं पद्भ्यां बलेन बलिनां वरः ॥ १०
अवगाढे रथे भूमौ जानुभ्यामगमन्हयाः ।
ततः शरः सोऽभ्यहनत्किरीटं तस्य धीमतः ॥ ११
अथार्जुनस्योत्तमगात्रभूषणं
धरावियद्द्योसलिलेषु विश्रुतम् ।
बलास्त्रसर्गोत्तमयत्नमन्युभिः

C. 8. 4658
B. 8. 89. 90.33
K. 8. 93. 97.34

---

K1 त्वरञ्जिर्जितम्, B2.4 त्वरस्तू°, D2 त्वरन्वर्जि° (for त्वरञ्ज्°) V1 B1.4 Da1 D1.2-4.7 त्वरन्न राजन्विजयार्थमुग्रम्, Dn1 उवाच चोर्घ्वगिरमूर्जिता नृप, D6 S (T2 missing) सुवन्नदो-र्घ्वन्त्(D5 T1 °सुर्घस्व°; G1 °घोर्घस्व°, G2 M1 °तोर्घस्व°)-रसुर्जित नृपा. — After 9, B2.4 ins 1088*.

10 $^{a}$) K3 संधायमान — $^{c}$) B D2.7 आक्रामद्; D3 आक्रमन् (for आक्रम्य)

11 K4 B1-4 D2.7 om 11$^{cd}$ V1 Da1 Dn1 D1.4-6 T1 subst. for 10-11. B2.4 ins after 9

1088* स सायकः कर्णभुजाभिसृष्टो
हुताशनार्कप्रतिमः सुघोरः ।
युगान्तर प्राज्वलदन्तरिक्षे
कुर्वन्महानादं नभसो भीमरूप ।
तं प्रेक्ष्य दीप्तं युधि माधवस्तु [5]
त्वरान्वित कंसरिपुः सलीलम् ।
पदा विनिष्पिष्य रथोत्तमं तं
प्रावेशयज्जगतीं किष्कुमात्रम् ।
क्षितिं गता जानुभिस्ते तु वाहा-
स्तत शर सोऽभ्यहनत्किरीटम् । [10]

[D1 om. lines 1-2. — (L. 1) Dn1 कर्णभुजप्रसृष्टो; T2 °भुजाद्विसृष्टो — (L. 2) T2 हुताशनार्चि (for °नार्क°). D1 सुघोरा — (L. 3) B2.4 Da1 D1.2 युगान्तर, D5 समायात (for युगान्तर). Dn1 D1 T2 कोपितु (D1 °भुज°)प्रमुक्तो (for प्राज्वलदन्तरिक्षे). — (L. 4) Dn1 D1 T2 विवृण्वन् प्राज्वलद-(D1 °ल्लो)न्तरिक्षे — After line 4, T2 reads lines 1-2 of 1089*, and om lines 5-6 — (L. 5) B1 Da1 D1.2 दृष्ट्वा (for तु). D4 संप्रेक्ष्य चैनं युधि माधवेन — (L. 6) Dn1 त्वरान्वित सत्वरमेव लीलया; D4 त्वरान्वितेन त्वरया बलीयसा — (L. 7) Dn1 स- (for त). D4 पादौ विनिमीड्य रथोत्तमोर्वी — (L. 8) Dn1 प्रविश्यद (for प्रावेश°) Dn1 पृथिवीं, Cc जगतीं (as above) Dn1 T2 निविवेश, Ca हस्तमात्र (sic) (for किष्कुमात्रम्). Co cites किष्कुः D8 हस्तार्धमात्रं जगतीं प्रवेशित — (L. 9) D6 भूमिं (for क्षितिं). T2 जानुबलेन (for °भिस्ते तु). Dn1 तेषः; D1 अस्य, D3 तस्य (for त तु) — (L. 10) V1 B2 [s]भ्यहनद् Dn1 हेनच्छ्रश्चैदनरीचिवर्णो, D4 सत्वरवरस्तनवर्मसुरा (sic)]

On the other hand, T1 G M subst. for 10-11. T2 cont. after 1088*

1089* समापतन्तं ज्वलितं निरीक्ष्य
वियद्गतं वृष्णिकुलप्रवीरः ।
रथस्य चक्रं सहसा निपीड्य
पञ्चाङ्गुलं मज्जयति स्म वीरः ।

[T2 reads lines 1-2 after line 4 of 1088* — (L. 1) T1 समीक्ष्य (for निरीक्ष्य) — (L. 2) G2 -कुरु- (for -कुल-). — (L. 3) T2 पादेन (for रथस्य) T1.2 चक्रे G2 रथं स्यन्दचक्रे सहसा निपय — (L. 4) G2 पञ्चाङ्गुलि T1.2 M सादयत्प्रमेयः, G1 मज्जयदप्रमेयः.]

T1.2 G M cont. V1 Da1 Dn1 D1.4-6 cont. after 1088* B1.3 D2.7 ins after 11$^{ab}$ B3 ins. after 11$^{cd}$

1090* ततोऽन्तरिक्षे सुमहाद्विनाद
संपूजनार्थं मधुसूदनस्य ।
दिव्याश्च वाचः सहसा बभूवु-
र्दिव्यानि पुष्पाण्यथ सिंहनादाः ।
तस्मिंस्तथा वै धरणीं निमग्ने [5]
रथे प्रयोगान्मधुसूदनस्य ।

[(L. 1) B1.3.5 D3 ततोऽन्तरिक्षे D4 (before corr as above) तु (for तु) — G1 om. lines 3-6. — (L. 3) T1.2 G1.3 M वाता (for वाचः) — (L. 4) D4 c transp दिव्यानि and पुष्पाणि D4 [अ]थ चाशु पेतु°, D5 [अ]थ सिंहनादः; T1.2 G3 च कृष्णमर्चन् (G3 °मार्च्छन्), G1 तु कृष्णमीरतन्, M च कृष्णमार्चयन् (M1 °मर्चयत्) (for [अ]थ सिंहनादाः) — (L. 5) D6 रथे वै, T1.2 G1.3 M च किंचिद् (for तथा वै) D1.3 T1.2 M1-4 धरणी D1 [इ]व मग्ने (for निमग्ने) — (L. 6) D5 यथा (for रथे). B1 D4 T1.2 G1.3 M प्रयत्नात् (for प्रयोगान्).]

— After the above, T1.2 G M1.3.4 cont. 1093*

12 D2 om. 12 T1 G1.2 M1.3.4 read 12 and T2 reads 12$^{a}$ after 1094* G3 om 12$^{a}$ — $^{a}$) B2 तथा, T1.2 G1.3 M1-4 ततो (for अथ) K3 -गाढ- (for -गात्र-) — After 12$^{a}$, T1 G1.2 M1 read 13$^{b}$ repeating it in its proper place. T2 om. 12$^{bcd}$ G3 reads 13$^{bcd}$ after 17 — $^{b}$) K3 धर, G1 रथा (for धरा-) K3 B1.6 -वियतौ, B2 वियता; Da1 D1.5 -वियतो; T1 G3 -वियस्व-, G1.2 -वियद्यौः- (for -वियद्द्यो-) D5 सलिलेष्ट- (for -सलिलेषु) ※Co° द्यौ सलिलेनेतिमावेऽपि संचिरार्य ।※ — After 12$^{ab}$, D1 (erroneously) reads 8.65.34$^{c}$-8.66.4$^{d}$ — $^{c}$) V1 B1.3-5 Da1 Dn1 D1.2.5.7 स्यालास्त्र- (for बलास्त्र-). B2 D6.8 महेन्द्रदत्तं रिपुणाहृतं नृप (D6 हरि°); D4 जयार्थमर्थोत्तमरत्नमर्चितं; S (T2 om., T3 missing)

शूरेण मूर्ध्नः स जहार सूतजः ॥ १२

दिवाकरेन्दुज्वलनग्रहत्विषं
  सुवर्णमुक्तामणिजालभूषितम् ।
पुरंदरार्थं तपसा प्रयत्नतः
  स्वयं कृतं यद्भुवनस्य सूनुना ॥ १३

महार्हरूपं द्विषतां भयंकरं
  विभाति चात्यर्थसुखं सुगन्धि तत् ।
निजघ्नुषे देवरिपून्सुरेश्वरः
  स्वयं ददौ यत्सुमनाः किरीटिने ॥ १४

हराम्बुपाखण्डलवित्तगोप्तृभिः
  पिनाकपाशाशनिसायकोत्तमैः ।
सुरोत्तमैरप्यविषह्यमर्दितुं

---

वलास्त्र(T1 G3 °स्त्रि)सर्गोत्तममन्युभिस्तदा (G1 °भि सह). Co cites व्यालास्त्रससर्ग° — d) K3 मूर्द्धा; Dn1 मूर्ध्नि; T1 तद्वै; G2 वीर (for मूर्ध्नः) K3 सश्रुहार (sic), V1 B D (except D3, D2 om.) T1 G M प्रजहार (for स ज°)

13 a) V1 Dn1 D2 -ज्वलनप्रभ(V1 °ह)त्विषं; B1 -ज्वलनाग्रहद्विषं — T1 G1.2 M1 read 13b for the first time after 12a — b) Dn1 D2.6 T1 (both times) G M -मणि(M2 -वलि)वज्रभूषितं (G1 M1 [both first time] °भूषणं; G2 [first time] °चित्रितं), T2 -मणिरत्न° B1 -भूषणं (for -भूषितम्) — c) Ś K1.2.4 पुरंदरात्तं — d) K3 तद् (for यद्) K4 भवनस्य; V1 B (except B5) Da1 Dn1 D1.3-7.8 (marg) T2 G M विभु(G3 °धि)ना; T1 हि महत् (for भुवनस्य) V1 B1-4 Da1 Dn1 D1.3-7.8 (marg) S (T3 missing) स्वयंभुवा; B5 मत्रो (for सूनुना)

14 a) D2 T1 महास्त्र(T1 °हि)रूपं; T2 °र्हं मूर्तं Ś K1.2.4 द्विषतो D4 विनाशनं (for भयंकरं) — G1.3 om. 14b — b) Ś2 K3 D8 सुगंधितं (Ś2 °नं) (for °गन्धि तत्) V1 B2 D1.5 त्रिमर्त्यारि(V1 °वि)घ्नं सुसु(V1 स्वसु-; B2 सलु)ख सुगधिनं; B1.4 विभर्त्यरिघ्नं सुसुखं सुगधि च (B1 °संधिनं); B3.5 प्रभावद्(B5 °म)त्यर्थसुखं सुगधि च; Dm D2 T2 G2 M विभर्तुरत्यर्थसुख सुगधिनं (D2 °धिं; T2 °धि यत्; M °धि च); D3.7 विभर्त्यरिघ्नं सुसुखं सुगंधिं, D4.6 विचित्ररूपं च सुगधिमुज्वलं; T1 ददावतिप्रीतमना किरीटिने — c) K3 T1.2 M निजघ्नुषो; Dn1 D4.6 जिघांसते (D6 before corr °तो); G निजघ्न(G2 °घ्नि)ते; Ca °घ्नुषे (as in text) K3 सुरारे°; B5 पुरदर°; D4 किरीटिने; G1 भयंकरान् (for सुरेश्वर°) — d) K1 सुमना; D6 सुमहत् K3 किरीटिन°, D4 सुरेश्वर° S (T3 missing) स्वयं ददौ यद्धि मुदार्जुनाय

15 T1 G M1.3.4 read 15 after 1095*. — a) B4 भूर्वंबु; Da1 D1.5 Ca भूरंबु-; D2 हरांशु- (for हराम्बु) Ś2 (sup lin as in text) -पाखंडव; K3 °माखडल-; Ca -पा° (as in text) K3 -गोप्रमित्-; Da1 -गोतृभि°; Ca -गोप्तृ° (as in text). T1 घृतं च पूर्वं हरिसूत्र गोप्तृभि°; T2 G M हरप्रचेतोहरिवित्त°. — b) D1 पिनाकि K4 -सायकोत्तम, B2 -निकायोत्तमै°; S (T3 missing) -दंडधारिभि° (for -सायकोत्तमै) —For 15ab, D6 subst.

1091* क्षत नयद्रुद्रगणे पिनाकिना
  सहायवान्पावकमंनिभै शरै ।

— c) B1 शरोत्तमैर्; M2-4 सुरेश्वरैर्; Ca सुरोत्तमैर् (as in text) B1.4 D2.4 (before corr as in text) [अ]-विसह्यम्, D2 [अ]तिसह्यम्; Ca [अ]विपह्यम् (as in text) B1 अर्चितं; B4 (marg) Da1 D1.5 Ca माहवे; D1 Co अर्दितं (for अर्दितुं) — After 15c, T1 G2 ins.

1092* चिरं धृतेनादितिनेह राजन् ।

— d) B2 वेगेन (for नागेन) B2 जिहीर यद्; D4 चरेण तं (for जहार यद्) B1 G3 तद्वप; D8 (marg as in text) यद्विप; T1.2 G1.2 M तद्वपा B4 (marg) Da1 D1.5 Ca जहार नाराचवरेण त(Da1 य)द्वप — B2 Da1 Dn1 D1.4-7 M2 ins. after 15 K4 V1 B3 D3 after 16. T1.2 G M1.3.4 cont after 1090*

1093* स दुष्टभावो वितथप्रतिज्ञ
  किरीटमभ्याहनदर्जुनस्य ।

[(L. 1) D3.7 -प्रभिन्न, G1 -प्रयत्न (for -प्रतिज्ञ°), — (L. 2) D4 अस्याहरद् (for अभ्याहनद्) K4 B2 Da1 D1.5.7 किरीटमासाद्य तमुग्ररूप, Dn1 °टमिस्यद्भुतमर्जुनस्य ]

K4 V1 B2.5 Da1 Dn1 D1.3-7 M2 cont. T1.2 G1.2 M1.3.4 ins after 17

1094* विशुद्धजाम्बूनदरत्नभूषितं
  पार्थोत्तमाङ्गादहरत्तरस्वी ।
 तद्धेमजालावततं सुघोषं
  जाज्वल्यमानं निपपात भूमौ ।

[(L. 1) D6 प्रतप्त (for विशुद्ध) B2 -चित्ररूप (for -रत्न-भूषितं) Dn1 T2 नागो महार्हं तपनीयचित्रं, D4 T1 G2 M1 ततः (D4 नाग°) किरीटं तपनीयचित्रं, G1 M2-4 तत° किरीट (G1 °टी) बहुरत्नचित्रं (M3 °चित्रित) — (L. 2) D1 G2 प्रहरत्, D4 व्यधमत्; T1 न्यहनत्, M प्रदहत् (for अहरत्). — V1 B5 D3.7 om lines 3-4. — (L. 3) B2 Da1 D1.5.6 रत्न

प्रसह्य नागेन जहार यद्बुपः ॥ १५
तदुत्तमेपून्मथितं विषाग्निना
प्रदीप्तमर्चिष्मदभिक्षिति प्रियम् ।
पपात पार्थस्य किरीटमुत्तमं
दिवाकरोऽस्तादिव पर्वताज्ज्वलन् ॥ १६
ततः किरीटं बहुरत्नमण्डितं
जहार नागोऽर्जुनमूर्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं
महेन्द्रवज्रः शिखरं यथोत्तमम् ॥ १७
मही वियद्द्यौः सलिलानि वायुना
यथा विभिन्नानि विभान्ति भारत ।
तथैव शब्दो भुवनेष्वभूत्तदा
जना व्यवस्यन्व्यथिताश्च चस्खलुः ॥ १८
ततः समुद्ग्रथ्य सितेन वाससा

C 8 4667
B 8 90 41
K 8. 97 41

(for हेम-) K4 -जालाविततं, T2 °विततं, G1 °घनत (for °वतत) K4 D1 (before corr) सुघोर, B2 Da1 D1.5.6 सुचारु (for सुघोर) — (L. 4) T1.2 G1 M2–4 संप्र(T1 प्रज)-ज्वलत्तन्, G2 M1 सं(G2 वि)प्रज्वलत (for जाज्वल्यमान) K4 घोर (for भूमौ) B2 Da1 D1.5.6 वपुपाश्रिया च (B2 °पाश्रिरूप) (for निपपात भूमौ).]

— After the above, B2 reads 17, repeating it in its proper place, while T1.2 G1.2 M1.3.4 read 12 after 1094* and 17 after 15.

16 D6 transp 16 and 17. — a) B2 तत्तद्वनेपून्मथितं; D1 तदुत्तमेसुन्म°, D4 तमुत्तमेपून्म° D8 विपासिना — b) Ś1 K1.2 अभिक्षि°, K3 V1 B2 D8 अतिक्षितौ, K4 अभिक्षित, B1.3.4 D2.7 अधि(D2.7 °भि)-क्षितौ (B1 °मौ); B5 Dn1 अयो क्षितौ (for अभिक्षिति) Da1 D1.5 अतिप्रिय क्षितौ; D2 अभिक्षितौ प्रयं, D4.6 अतीव शोभनं, T1.2 M अतीव च प्रिय; G1.3 अतीव सुंदरं, G2 अति-प्रदीप्तं (for अभिक्षिति प्रियम्) — Dn1 D2 om (hapl.) 16d–17a. — d) G1 पर्वतोज्वलान्, G2 °तो ज्वलन्; Bom. ed रक्तमदल (for पर्वताज्ज्वलन्)

17 Dn1 D2 om 17 (cf. v 1 16). T2 om 17 B2 reads 17 for the first time after 1094* · D6 transp 16 and 17 T1.2 G1.2 M1.3.4 read 17 after 15 — a) K3 स तत्, V1 B5 स वै (for ततः) G1 किरीटी D7 भूषितं, G1 चित्रं, G3 -चित्रित (for -मण्डितं) . B2 (first time) D6 दिव्यं प्रमेप्याशु (B2 °ध्यांत) नरेंद्र संख्ये — b) T1 नागोहरद् (for जहार नागो) B2 (second time) बाणो, D8 नापि (for नागो) D1 -मूर्धजो; D6 -मूर्धता — c) Da1 D1.5 शिर (for गिरे) K3 सुजातद्रुरु; B2 (first time) D6 °तोत्तम (for °ताङ्कुर) K2 द्रुतं (for द्रुमं) V1 गिरे स्वर्जांकुरपुष्पवर्धितं द्रुमं — d) B5 D8 G -वज्र, M1 -वज्रै B5 शिखिनं; D8 शिखरो B2 (first time) D6 यथैव शृंगं खलु चंद्रहा(B2 °धा)रितं — After 17, D4.6 ins 1095*, T1.2 G1.2 M1.3.4 ins 1094* and G3 reads 13bcd

18 D4 om. 18–19 D6 om 18a–20b. — a) D2 वियद्यां; M4 वियद्द्यो Dn1 सलिल च; D8 सलिलेन (for °लानि). T2 सलिलामिवायून् (for °लानि वायुना) — b) K4 om यथा K1 om. भान्ति K3 D8 यथा विभग्ना(D8 °भासा)नि नदति भारत, V1 B Da1 D1.3.5.7 यथा वि(Da1 D1.5 °धाव)रुणानि नर्दति भारत; Dn1 प्रसह्यासुभं विनिचूर्णतं यथा; D2 यथा निभुग्नानि दहंति पावका; T1.2 प्रसह्य रुणानि च (T2 °निव) चूर्णितानि, G1 (sup lin) 2 प्रसह्य रुणानि विघूर्णितानिव (G1 orig °ता दिवि); G3 M प्रसह्य रुणानि विचूर्णितानि (M1 °ताय) वा — c) K3 V1 B1.3–5 Da1 D1.3.5.7.8 तथैव शब्दं भुवनेषु सं स(D8 तस्त)दा; B2 Dn1 D2 T1 अतीव शब्दो (D2 °ब्द) भुवनेषु वै तदा; T2 G M इतीव शब्दं भुवनेषु (T2 °ने तु) ततया (M2–4 °दा) — d) D5 जनाद्. Ś1 V1 B2–4 D2.3.7 [अ]-व्यवसन्, K4 व्यसस्यन्; Dn1 [अ]व्यवसश्च; D5 प्रवंसन्; G2 [अ]व्यवधयन् (for व्यवस्यन्) T1.2 G3 M1 च विह्वला.; M2–4 बभूवु (for च चस्खलु). G1.3 जना व्यवस्यति दिशश्च विह्वला — After 18, B5 Dn1 S (T3 missing) ins 1095*

19 D4.6 om. 19 (cf. v l. 18) B5 om 19 — a) K3 स जग्रथ्य (corrupt), V1 स तद्ग्रथ्य; B1.4 Da1 स उद्ग्रथ्य; B2 स जद्ग्रथ्य (for समु°) V1 वासा (for वाससा) D2 तत समावेष्ट यदच्छन वाससा (sic) — b) K3 सु-; Da1 D1.3.8 G2 स (for स्व) K4 अभ्ययतस; T2 अभ्यधिकस् (for अभ्ययितस्) Ś K V1 D3.7 ततो; B2 D2.8 T1.2 G3 M तदा; G1.2 तथा (for स्थितो) — K4 V1 B1–4 Da1 D1–3.5.7 ins after 19ab B5 Dn1 S (T3 missing) after 18 D4.6 after 17.

1095* विना किरीट शुशुभे स पार्थ
श्यामो युवा शैल इवोत्तशृङ्ग ।

[(L. 2) D4.6 न; T1 M1 [ऽ]प्र; G1 [ऽ]स (for स) — (L 2) D6 तमोवृत ; M श्यामो यथा (for श्यामो युवा) Dn1 T1 नील (for शैल) K4 V1 B1.2.4.5 D1–4.6.7 T1.2 G श्वास-; Dn1 श्वोच-; M श्वाप (for श्वास-) ]

